# परिशिष्टम्

## विशेषविवरणानि

( Notes )

### १. नखक्षतम्

सुरतक्रीडा में नखाघात का शास्त्रीय विधान है, उसके स्थान निर्दिष्ट हैं। यथा—

नखाघातः प्रदातव्यो यथास्थानानि कर्मसु। पार्श्वयोः स्तनयोश्चैव ऊरौ चैव नितम्बके॥
कक्षस्थले च कर्णान्ते कपाले बाहुमूलके। ग्रीवायां कण्ठदेशे च नखाघातं समाचरेत्॥
तथा सर्वशरीरेषु नखं दद्याच्छनैः शनैः॥ इति कामशास्त्रम्।

### २. दन्तक्षतम्

सुरतक्रीडा में दन्ताघात के स्थान भी निर्दिष्ट हैं। यथा—

'स्तनयोर्गण्डयोश्चैव ओष्ठे चैव तथाधरे।
दन्ताघातः प्रकर्त्तव्यः कामिनीनां सुखावहः॥' इति कामशास्त्रम्।

### ३. द्रुघणः

द्रुर्वृक्षः हन्यतेऽनेनेति द्रुघणः कुठारः। 'करणेऽयोविद्रुषु' इत्यप्प्रत्ययः घनादेशश्च। 'पूर्वपदात्संज्ञायामगः' इति णत्वम्। यथोक्तम्—

'द्रुघणस्त्वायसाङ्गः स्याद् वक्रग्रीवो बृहच्छिराः। पञ्चाशदङ्गुलोत्सेधो मुष्टिसम्मितमण्डलः॥'
अस्य चतस्रः क्रियाः—उन्नामनं प्रपातञ्च स्फोटनं दारणं तथा।
चत्वार्येतानि द्रुघणे वल्गितानि श्रितानि वै॥'

### ४. अग्निशौचमंशुकम्

अग्निना शौचं शुद्धिर्यस्य तदग्निशौचम्। साधारणं वस्त्रं मलिनं सजले प्रक्षालितं शुद्धयति इदं वस्त्रं वह्नौ क्षिप्तं सदेव दीप्तवर्णं निष्क्रामति। अस्य वस्त्रस्य चर्चा दुर्गासप्तशत्याम्—

"वह्निरपि ददौ तुभ्यमग्निशौचे च वाससी।"

### ५. रणरणकः

रणरणकः-उत्कण्ठा। यथा उत्तररामचरिते भवभूतिः—"सैवेयं रणरणकदायिनी चित्रदर्शनाद्विरहभावना देव्याः स्वप्नोद्देशं करोति।"

### ६. प्रधानस्य परिणामात्

सांख्यदर्शन के अनुसार सत्त्व-रज-तम नाम तीन गुणों को साम्यावस्था प्रकृति या प्रधान कहलाती है। पुरुष कुछ कर्त्ता-धर्त्ता नहीं है। प्रधान के गुणों में एक प्रकार की जब न्यूनाधिकता होती है तभी उससे सृष्टि होती है। वह न्यूनाधिकता प्राणि-कर्मानुसार होती है, उसी न्यूनाधिकता को यहाँ परिणाम कहा है।

### ७. महेन्द्रपदवर्त्तिनो नहुषस्य राजर्षेरगस्त्यशापादजगरता नहुषशापवृत्तान्तो महाभारते—३।१८

'अहं हि दिवि दिव्येन विमानेन चरन् पुरा। अभिमानेन मत्तः सन् किञ्चिन्नान्यदचिन्तयम् ॥
ब्रह्मर्षि-देव-गन्धर्व-यक्ष-राक्षस-पन्नगाः। करान्मम प्रयच्छन्ति सर्वे त्रैलोक्यवासिनः ॥
चक्षुषा यं प्रपश्यामि प्राणिनं पृथिवीश्वर। तस्य तेजो हराम्याशु तद्धि दृष्टेर्बलं मम ॥
ब्रह्मर्षीणां सहस्रं हि उवाह शिविकां मम। स मामपनयो राजन् भ्रंशयामास वै श्रियः ॥
तत्र ह्यगस्त्यः पादेन वहन् स्पृष्टो मया मुनिः। अगस्त्येन ततोऽस्म्युक्तो ध्वंस सर्पेति वै रुषा ॥
ततस्तस्माद्विमानाग्रात्प्रच्युतश्च्युतभूषणः। प्रपतन् बुबुधे स्मानं व्यालीभूतमधोमुखम् ॥

### ८. सौदासस्य च वशिष्ठसुतशापान्मानुषादत्वम्

सौदासः इक्ष्वाकुवंशीयोऽयोध्याधिपतिः। स पुरा मृगयां चरन् एकं राक्षसमवधीत्। अस्य राक्षसस्य भ्राता वैरशोधनं चिकीर्षुः सूदरूपधरोऽस्य राज्ञो गृहं प्रत्युवास। एकदा त्वसौ राक्षसो भोक्तुकामाय नृपतेः सौदासस्य गुरुपुत्राय नरामिषं पक्त्वा ददौ। वशिष्ठपुत्रस्तु तद्दृष्ट्वाऽभोज्यमतिक्रुद्धः सन् राक्षसो भवेति राजानमशपत्। इयं कथा महाभारते १।१७७

### ९. त्रिशङ्कोश्च शापवशाच्चाण्डालभावः

त्रिशङ्कुः सूर्यवंशीयराजविशेषः। एष वशिष्ठमाह अहं शरीरेणानेन स्वर्गं गन्तुं यजेयम्, वशिष्ठ एतदशक्यमित्युवाच। ततो राजा तस्य पुत्रानुवाच, सशरीरो यज्ञेन स्वर्गं यथाप्नुयां तथा कुरुत, यद्यहं भवद्भिः परित्यक्तस्तथा त्वन्यं गुरुमुपासिष्ये, वशिष्ठपुत्रास्तच्छ्रुत्वा राजानमूचुर्भगवान् वशिष्ठो यदशक्यमाह तदस्माभिः कथं शक्यम्। राजोवाच—यष्टुमन्यां गतिं गमिष्यामि तच्छ्रुत्वा ऋषिपुत्रा राजानं शेपुः—श्वचाण्डालो भविष्यसि। ततस्तस्यां रात्र्यामतीतायां स चाण्डालदर्शनो भूत्वा विश्वामित्रं शरणमाययौ। ( इयं कथा रामायणे प्राप्यते )

### १०. शापदोषादष्टानामपि वसूनामुत्पत्तिः

देवीभागवते—२।३ इयं कथा लिखिता—

'एतस्मिन् समये चाष्टौ वसवः स्त्रीसमन्विताः। वशिष्ठस्याश्रमं प्राप्ता रममाणा यदृच्छया ॥
पृथ्वादीनां वसूनाञ्च मध्ये कोपि वसूत्तमः। द्यौर्नाम्ना तस्य भार्याथ नन्दिनी तां ददर्श ह ॥
दृष्ट्वा पतिं सा पप्रच्छ कस्येयं धेनुरुत्तमा। द्यौस्तामाह वशिष्ठस्य गौरियं शृणु सुन्दरि ॥
दुग्धमस्याः पिबेद्यस्तु नारी वा पुरुषोऽथवा। अयुतायुर्भवेन्नूनं सदैवागतयौवनः ॥
तच्छ्रुत्वा सुन्दरी प्राह मर्त्यलोकेऽस्ति मे सखी। उशीनरस्य राजर्षेः पुत्री परमशोभना ॥
तस्या हेतोर्महाभागः सवत्सां गां पयस्विनीम्। आनयस्वाश्रमश्रेष्ठं नन्दिनीं कामदां शुभाम् ॥
यावदस्याः पयः पीत्वा सखी मम सदैव हि। मानुषेषु भवेदेका जरारोग-विवर्जिता ॥
तत्तस्या वचनं श्रुत्वा द्यौर्जहार च नन्दिनीम्। अवमत्य मुनिं दान्तं पृथ्वाद्यैः सहितोऽनघः ॥
हृतायामथ नन्दिन्यां वशिष्ठस्तु महातपाः। आजगामाश्रमपदं फलान्यादाय सत्वरः ॥
नापश्यत्स यदा धेनुं सवत्सां स्वाश्रमे मुनिः। वारुणिश्चापि विज्ञाय ध्यानेन वसुभिर्हृताम् ॥

वसुभिर्मे हृता धेनुर्यस्मान्मामवमत्य वै । तस्मात्सर्वे भविष्यन्ति मानुषेषु न संशयः ॥
एवं शशाप धर्मात्मा वसूंस्तान् वारुणिः स्वयम् । श्रुत्वा विमनसः सर्वे बभूवुर्दुःखिताश्च ते ॥
शप्ताः स्म इति जानन्त ऋषिं तमुपचक्रमुः । प्रसादयन्तस्तमृषिं वसवः शरणं गताः ॥
मुनिस्तानाह धर्मात्मा वसून्दीनान्पुरःस्थितान् । अनुसंवत्सरं सर्वे शापमोक्षमवाप्स्यथ ॥
येनेयं विहृता धेनुर्नन्दिनी मम वत्सला । तस्माद् द्यौर्मानुषे लोके दीर्घकालं वसिष्यति ॥
ते शप्ताः पथि गच्छन्तीं गङ्गां दृष्ट्वा सरिद्वराम् । ऊचुस्तां प्रणताः सर्वे शप्तां चिन्तातुरां नदीम् ॥
भविष्यामो वयं देवि कथं देवाः सुधाशनाः । मानुषाणाञ्च जठरे चिन्तेयं महती हि नः ॥
तस्मात्त्वं मानुषी भूत्वा जनयास्मान्सरिद्वरे । शन्तनुर्नाम राजर्षिस्तस्य भार्या भवानघे ॥
जातान् जातान् जले चास्मान् विनिक्षिप सुरापगे । एवं शापविनिर्मोक्षो भविता नात्र संशयः ॥
तथेत्युक्ताश्च ते सर्वे जग्मुर्लोकं स्वकं पुनः । गङ्गापि निर्गता देवी चिन्त्यमाना पुनः पुनः ॥

## ११. किङ्किरातः

किङ्किरं रक्तवर्णत्वमतति पुष्पकाले इति किङ्किरातोऽशोकवृक्षः ।

किङ्किरातो हिमस्तिक्तः कषायश्च हरेदसौ ।
कफपित्तपिपासास्रदाहशोषवमिक्रिमीन् ॥

( भावप्रकाशे )

## १२. सत्त्वाख्यं ज्योतिः

सत्त्वगुणस्वरूपं ब्रह्मभूयम् । यथाह भगवद् गीता—
'ऊर्ध्वं गच्छन्ति सत्त्वस्थाः' इति ।

